# एहि, हसाम

## (विनोदकणिकानां सङ्ग्रहः)



संस्कृतभारती

बेङ्गलूरु

*प्रकाशनम् -*
**संस्कृतभारती**
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



प्रथममुद्रणम् - १९९८ - ५०००
मुखपुटकला - 'अरसु'

मूल्यं - रू. १०.००

*मुद्रणम् -*
वागर्थ प्रिण्टानिक्स्
बसवनगुडि, बेङ्गलूरु - ४

**EHI, HASAMA** - A Collection of jokes in Samskrit. Publisher - SAMSKRITA BHARATI - 'Aksharam'. 8th Cross. II Phase. Girinagar. Bangalore - 560 085. Ph : 6721052 / 6722576

Pages - iv + 48 Price - Rs. 10-00 First Print - December 1998+
Printed at - VAGARTHA PRINTONICS. Basavanagudi. Bangalore - 4

# प्रास्ताविकम्

*विनोदकणिकाः सर्वेषां मनोविनोदाय भवन्ति । बालाः, युवकाः, प्रौढाः, वृद्धाः इत्यादयः सर्वे अपि विनोदकणिकानां पठने प्रवृत्तिं प्रदर्शयन्ति । अतः सिद्धं यत् विनोदकणिका सर्वविधान् अपि जनान् तोषयति इति । 'संस्कृतं सर्वान् प्राप्नुयात्' इति अस्ति चेत् विनोदकणिकाः अपि संस्कृतभाषया भवेयुः एव खलु ?*

*संस्कृते पठनसाहित्यं विरलम् । तत्रापि सरलसंस्कृतेन रचितं साहित्यम् अतिविरलम् । एतां विरलताम् अपनेतुम् अयं प्रयासः क्रियमाणः अस्ति । आसक्तिजनकं साहित्यं प्राप्तुं सर्वे अभिलषन्ति एव ।*

*अत्र प्रकाशिताः काश्चन विनोदकणिकाः 'सम्भाषणसन्देशे' काले काले प्रकाशिताः अपि आसन् । अत्रत्याः विनोदकणिकाः न हि एकेन द्वाभ्यां त्रिभिः वा सङ्गृहीताः । बहुभिः कार्यकर्तृभिः सङ्गृहीतानां विनोदकणिकानां सङ्कलनमात्रम् अत्र कृतम् । सङ्ग्रहीतॄणां नाम्नः आवली दीर्घा स्यात् इत्यतः सा अत्र न प्रकाशिता । अन्यच्च सङ्ग्रहीतारः अपि एवं नामप्रसिद्धीकरणेच्छया एतत् सङ्ग्रहकार्यं न कृतवन्तः इति भावयामः वयम् ।*

*विनोदकणिकासङ्ग्रहीतृभ्यः सर्वेभ्यः कार्यकर्तृभ्यः, मुखपुटकलाकाराय 'अरसु'वर्याय, मुद्राणालयबन्धुभ्यः, अन्येभ्यः सर्वेभ्यः सहकारिबन्धुभ्यः चापि कृतज्ञताः समर्पयामः वयम् ।*

बहुधान्य सं ॥ मार्गशीर्ष-अमावास्या — **- प्रकाशकः**

१८.१२.१९९८

## *निबन्धनम्*

एतस्य पुस्तकस्य पठनसमये निबन्धनम् अस्ति यत् पठनकाले पठित्रा किञ्चिदपि न हसनीयम् इति ।

## यदि सर्वत्र समानः नियमः....

विमाप्रतिनिधिः - भवदीयस्य यानस्य विमाशुल्कं वयं स्वीकुर्मः । यदि तद् यानं दुर्दैववशात् नष्टं, भ्रष्टं वा भविष्यति तर्हि वयं भवते तस्य मूल्यं धनरूपेण न दास्यामः ।

ग्राहकः - किं तर्हि ?

विमाप्रतिनिधिः - तत्स्थाने वयम् अपरं नवीनं यानमेव भवते दास्यामः ।

ग्राहकः - शोभनम् । यानस्य स्थाने यानस्य एव प्राप्तौ मम कोऽपि विरोधः नास्ति । किन्तु यदि सर्वत्र भवताम् एषः एव नियमः तर्हि मया पूर्वं दत्तं मम पत्न्याः विमाशुल्कम् इदानीमेव प्रत्यर्पयन्तु ।



## धन्यवादः चिकित्सायै

आगन्तुकः पुरुषः - सुप्रभातं वैद्यराज ! भवतः चिकित्सया अहम् उपकृतः इति वक्तुम् अत्र आगतवान् अस्मि ।

वैद्यः - एवम् ? किन्तु अहं कदापि भवतः चिकित्सां न कृतवान् खलु ?

आगन्तुकः पुरुषः - सत्यम् । किन्तु मम श्वशुरस्य चिकित्सा भवता एव कृता, यश्च ह्यः परलोकं गतवान् !



## यथा भोज्यं.....

कश्चन कविः किमपि चर्वन् काव्यं लिखन् आसीत् । तदा तत्र आगतः तस्य वयस्यः पृष्टवान् - ''मित्र ! किं चर्वति भवान् ?''

''चर्वणकम् (च्यूयिंग् गम्) । चर्वितचर्वणं कुर्वन् अस्मि अहम्'' - इति कविः उक्तवान् ।

तदा सः वयस्यः स्वगतम् उक्तवान् - ''यथा भोज्यं तथा काव्यम् ।''



## ज्योतिषकस्य उपदेशः

एकदा एकः चञ्चलप्रवृत्तिकः पुरुषः पण्डितसमीपम् आगत्य वदति - ''मम हस्ते कण्डूतिः दृश्यते'' ।

पण्डितः वदति - ''तर्हि धनलाभः भविष्यति ।''

''मम कर्णे अपि कण्डूतिः दृश्यते ।''

''एवं तर्हि कर्णाभरणलाभः भविष्यति ।''

''मम कण्ठे अपि कण्डूतिः दृश्यते ।''

तत् श्रुत्वा पण्डितः अल्पकोपमिश्रितेन स्वरेण उक्तवान् - ''भवान् त्वरया वैद्यं पश्यतु, यतः भवतः चर्मरोगः अस्ति ।''



## अहम् अपि निपुणः...

छात्रावासे वसन् कश्चन बालकः स्वपेटिकायाम् एकं राङ्कवं स्थापयित्वा तदुपरि एकां चिटिकां स्थापितवान् । तत्र लिखितम् आसीत् - ''एतत् केनापि न चोरणीयम् । यतः अहं मल्लविद्यानिपुणः अस्मि ।''

एकः चोरः आगत्य राङ्कवं चोरितवान् । चिटिकायां लिखितं पठितवान् अपि । सः अपि तत्र एकां चिटिकां स्थापितवान् । तत्र लिखितम् आसीत् - ''मम अनुसरणं व्यर्थम् । यतः अहं धावननिपुणः अस्मि ।''



## वृष्टिकारणतः...

अध्यापकः सर्वान् छात्रान् उद्दिश्य उक्तवान् - ''क्रीडास्पर्धाविषये सर्वेऽपि एकं प्रबन्धं लिखन्तु'' इति । सर्वे छात्राः लिखितवन्तः । किन्तु एकः छात्रः लिखन् न आसीत् ।

अध्यापकः तं पृष्टवान् - ''किं भोः, भवान् प्रबन्धं किं न लिखति ?''

तदा छात्रः शान्तस्वरेण उक्तवान् – ''श्रीमन् ! क्रीडास्पर्धा तु वृष्टिकारणतः स्थगिता अस्ति ।''



## अहो, विस्मरणशीलता !

''मम पत्युः महती विस्मरणशीलता । 'आपणात् फलानि आनयतु' इति अहम् उक्तवती आसम् । स तु वस्त्राणि आनीतवान्'' - एका उक्तवती ।

तदा अपरा उक्तवती – ''मम पत्युः विस्मरणशीलता तु इतोऽपि घोरा । एकदा सः आपणे मां दृष्ट्वा उक्तवान् आसीत् – 'भगिनि, किं नाम भवत्याः ? भवती मया दृष्टपूर्वा इति भाति' इति ।''



## तावदेव न...

रात्रौ अतिवेगेन स्कूटर्यानं चालयन्तं कञ्चित् गृहीत्वा आरक्षकः उक्तवान् – ''तिष्ठतु रे ! दीपरहितं स्कूटर्यानं चालयति खलु भवान् ?''

तदा प्रस्थानत्वरां प्रदर्शयन् स्कूटर्चालकः उक्तवान् – ''आरक्षकवर्य ! अपसरतु इतः । मम यानस्य अवरोधिका सम्यक् नास्ति । चालनानुज्ञापत्रम् अपि मम नास्ति ।''



## आसक्तिः तदर्थम्...

पत्नी - अहं भगवन्तं प्रार्थये यत् भवान् अचिरात् एव स्वस्थः भवेत् इति ।

पतिः - अहो मम स्वास्थ्यविषये असदृशी आसक्तिः भवत्याः ।

पत्नी - आम् । सर्वाणि गृहकार्याणि एकाकितया कुर्वती अहं सप्ताहाभ्यन्तरे श्रान्ता जाता अस्मि ।



## दृष्टिदोषः तस्य...

''भवत्याः पुत्रः बालः चेदपि तीक्ष्णमतिः । अद्य प्रातः मिलितः सः माम् उक्तवान् - 'भवती सुन्दरी दृश्यते' इति'' इति उक्तवती कमला ।

तदा विमला उक्तवती - ''एवं तर्हि मया अचिरात् एव सः नेत्रचिकित्सकस्य समीपं नेतव्यः एव'' इति ।



## आगामिवर्षे आगमिष्यामि...

उत्तरकुमारः कश्चन अलमसशिखामणिः । युवकं तं तदीयः पिता सदा बोधयति स्म - 'कमपि उद्योगं करोतु रे' इति । पितुः पीडाम् असहमानः सः कञ्चित् श्रेष्ठिनं दृष्टवान्, उद्योगापेक्षां निवेदितवान् च । श्रेष्ठी उद्योगदानम् अङ्गीकृतवान् ।

यदा वेतनप्रस्तावः आगतः तदा श्रेष्ठी उक्तवान् - ''यदि भवान् मम कार्यालये कार्यं करोति तर्हि भवते एतस्मिन् वर्षे प्रतिमासं ३०० रूप्यकाणि वेतनत्वेन दास्यामि । आगामिवर्षे तावत् ४०० रूप्यकाणि दास्यामि'' इति ।

तदा उत्तरकुमारः - ''तर्हि आगामिवर्षे एव उद्योगार्थं भवत्कार्यालयम् आगमिष्यामि'' इति उक्त्वा ततः निर्गतवान् ।



## न मृता इत्यतः एव...

धावन् आगत्य आरक्षकालयं प्रविश्य कश्चित् आरक्षकाधिकारिणम् उक्तवान् - ''श्रीमन्, मां शीघ्रं कारागारे स्थापयतु कृपया । अहं पत्नीं दण्डेन प्रहृत्य आगतवान् अस्मि ।''

''किं सा मृता ?''

''सा यदि मृता स्यात् तर्हि वरम् अभविष्यत् । किन्तु तथा न जातम् ।

सा दण्डम् उन्नीय प्रहर्तुं माम् अनुसृत्य आगच्छन्ती अस्ति ।''



## दन्ताः तु द्वात्रिंशत् भवन्ति

वैद्यकीयं पठितुम् इच्छन् पुत्रः पितरं पृष्टवान् -

''तात ! दन्तचिकित्साध्ययनतः अधिकलाभः, उत नेत्र-चिकित्साध्ययनतः ?'' इति ।

वणिक् पिता उक्तवान् - ''दन्तचिकित्साशास्त्रस्य अध्ययनतः एव अधिकः लाभः इति अहं भावयामि ।''

''तत् कथम् ?'' - कुतूहलेन पृष्टवान् पुत्रः ।

तदा पिता उक्तवान् - ''प्रतिजनं नेत्रद्वयम् एव भवति । दन्ताः तु द्वात्रिंशत् भवन्ति ।''



## स्वयं कुतो न क्रीयते ?

''भवत्याः प्रयाणचिटिकां प्रदर्शयतु कृपया ।''

''एतावता उभाभ्यां मम प्रयाणचिटिका दृष्टा । भवान् तृतीयः उपस्थितः । यदि चिटिकादर्शने भवतां तावत् कुतूहलं तर्हि कुतो वा एकां चिटिकां स्वयं न क्रीणन्ति भवन्तः ?''



## भीतिः मास्तु...

''आगच्छतु अन्तः । शुनकात् भीतिः मास्तु भवतः ।''

''किं सः न दशति ?''

''तस्य दंशनस्वभावः अस्ति वा न वा इति अहम् अपि न जानामि । यतः एषः शुनकः ह्यः एव क्रीतः मया ।''



## अन्या न, सा एव...

किञ्चन रेल्यानं मन्दं गच्छति स्म । मध्ये मध्ये तिष्ठति स्म अपि । यानस्य मन्दगतिं, मध्ये मध्ये स्थगनं च दृष्ट्वा कश्चित् प्रयाणिकः कुपितः । तावता यानं पुनः स्थगितम् । क्रुद्धः प्रयाणिकः चालकसमीपं गत्वा पृष्टवान् - ''किमर्थं यानं स्थगितम् ?'' इति ।

''एका धेनुः मार्गक्रमणं कुर्वती अस्ति । अतः'' इति उक्तवान् चालकः ।

यानं प्रस्थितम् । पञ्चसु निमेशेषु यानं पुनः स्थगितम् । तदा प्रयाणिकः पुनरपि कोपेन चालकसमीपं गत्वा पृष्टवान् - ''पुनः स्थगितं खलु ? किम् अन्या धेनुः मार्गे आगता ?'' इति ।

तदा चालकः शान्तस्वरेण उक्तवान् - ''अन्या धेनुः न । पूर्वं या आगता आसीत् सा एव पुनः आगता'' इति ।



## वैपरीत्यम्

कश्चन संन्यासी आम्ल-लवणरहितम् आहारं सेवते स्म । एतत् दृष्ट्वा कश्चित् आश्चर्येण तं पृष्टवान् - ''आम्लं लवणं च विना कथं वा भवान् आहारं सेवते ?'' इति ।

तदा संन्यासी प्रतिप्रश्नं कृतवान् - ''आम्ल-लवणसहितम् आहारं कथं वा सेवते भवान् ?'' इति ।



## अग्रे अपि अस्ति एव...

वृष्टिबिन्दवः निरन्तरं पतन्तः आसन् । तस्मिन् वृष्टिसमये कश्चित् मन्दया गत्या गच्छन् आसीत् । तं कश्चित् पृष्टवान् - ''किञ्चित् वेगेन गतं चेत् वरं खलु ?'' इति ।

तदा सः उक्तवान् - ''किं तेन ? अग्रे अपि वृष्टिः अस्ति एव खलु ?'' इति ।



## मैत्रीमात्रं पर्याप्तम्...

कश्चन वणिक्, कश्चन कृषिकः च तपश्चरणार्थम् अरण्यं गतवन्तौ । कठोरं तपः आचरितवन्तौ । तयोः तपसा सन्तुष्टः देवः प्रत्यक्षीभूय प्रथमं कृषिकं पृष्टवान् - ''भक्त ! किम् इच्छति भवान् ?'' इति ।

''देव ! मह्यम् ऐश्वर्यम् आवश्यकम् । प्रासादसदृशं भवनम् आवश्यकम् । कार्यानानि आवश्यकानि । सकलसौभाग्यम् अपि आवश्यकम्....'' इति कृषिकः बहुधा अपेक्षां प्रकटितवान् ।

''तथास्तु'' इति वरेण कृषिकम् अनुगृह्य देवः वणिजः पुरतः स्थित्वा पृष्टवान् - ''भवान् किम् इच्छति ?'' इति ।

तदा वणिक् उक्तवान् - ''देव ! मह्यं किमपि वस्तु न आवश्यकम् । भवता इदानीं यस्मै कृषिकाय वराः दत्ताः तस्य मम च दृढा मैत्री यथा चिरं भवेत् तथा अनुगृह्णातु । तावता अलम्'' इति ।



## अन्यया लिखतु...

काचित् गृहिणी आतङ्कमिश्रितेन स्वरेण वैद्यं दूरवाण्या पृष्टवती - ''श्रीमन् ! मम पुत्रः लेखन्याः अग्रं गीर्णवान् अस्ति । इदानीं मया किं करणीयम् ?'' इति ।

तदा वैद्यः उक्तवान् - ''चिन्तां मा करोतु । अन्यां लेखनीम् अङ्कनीं वा स्वीकृत्य लिखतु'' इति ।



## न इदानीम्...

''सुखमयं जीवनं नाम कीदृशम् इति विवाहानन्तरं ज्ञातं मया'' इति उक्तवान् एकः ।

''तन्नाम विवाहानन्तरम् इदानीं भवान् सुखेन जीवन् अस्ति इति खलु भवतः आशयः ?'' इति पृष्टवान् अपरः ।

तदा प्रथमः उक्तवान् - ''तथा न । विवाहानन्तरं मया ज्ञातं यत् विवाहात् पूर्वतनं जीवनम् एव सुखमयम् आसीत् इति'' इति ।



## गुरोः वचनं सत्यं जातम्...

कश्चन प्राध्यापकः । पाठं पाठयित्वा छात्रान् कांश्चन प्रश्नान् पृष्टवान् सः । किन्तु केनापि उत्तरं किमपि न उक्तम् । सर्वे मौनं स्थितवन्तः आसन् । तत् दृष्ट्वा प्राध्यापकः उक्तवान् - ''मम गुरुः सर्वदा वदति स्म... ।''

प्राध्यापकस्य अग्रिमं वचनं श्रोतुं सर्वे कुतूहलिनः आसन् । तदा प्राध्यापकः पुनः उक्तवान् - ''मम गुरुः वदति स्म यत् भवान् भाविनि काले गर्दभानां पालकः भविष्यति इति । तदिदानीं सत्यं जातम्'' इति ।



## अनन्तरं द्रक्ष्यामि...

वैद्यः रोगिणः परीक्षां कुर्वन् उक्तवान् - ''भवतः एतस्य रोगस्य कारणं किम् इत्येव न ज्ञायते । मद्यपानस्य परिणामतः स्यात् एतत्'' इति ।

तदा रोगी उक्तवान् - ''एवं वा ? तर्हि भवतः मद्यपानजातः मदः यदा अपगमिष्यति तदा पुनः आगत्य भवन्तं द्रक्ष्यामि'' इति ।



## मूल्यम् अधिकं किमर्थम् ?...

कश्चन मस्तिष्क-सङ्ग्रहालयः आसीत् । तत्र विज्ञानि-तत्त्वज्ञानि-प्राध्यापकादीनां विविधजनानां मस्तिष्कं स्थापितम् आसीत् । तत्तन्मस्तिष्कस्य अधः मूल्यम् अपि निर्दिष्टम् आसीत् ।



कश्चन प्रेक्षकः सर्वं दृष्ट्वा सङ्ग्रहालयप्रमुखं पृष्टवान् – ''अत्र विज्ञानि-प्राध्यापकादीनां श्रेष्ठानां मस्तिष्कानि सन्ति । किन्तु सर्वेषां मूल्यस्य अपेक्षया राजकीयजनस्य मस्तिष्कस्य मूल्यम् अधिकम् । किमर्थं एवम् ?'' इति ।

''यतः राजकीयजनैः तत् जीवने कदापि न उपयुज्यते इत्यतः तत् अनुपयुक्तम् एव तिष्ठति इति कारणतः'' इति उत्तरं दत्तवान् व्यवस्थापकः ।



## न्यायवादी निरुत्तरः

कश्चन न्यायवादी प्रतिवादिनः परतया साक्ष्यं वक्तुम् आगतं कञ्चित् उक्तवान् – ''मया केचन प्रश्नाः पृच्छ्यन्ते । भवता 'आम्' इति, 'न' इति वा उत्तरं वक्तव्यम्, नान्यत् किमपि'' इति ।

''तत् कथं शक्येत ? केषाञ्चित् प्रश्नानां तादृशम् उत्तरं सर्वथा न शक्यते'' इति उक्तवान् साक्षी ।

''कुतो न शक्यते ?'' इति पुनः पृष्टवान् न्यायवादी ।

''कुतो न शक्यते इत्यस्य उदाहरणम् अहम् एव प्रदर्शयामि । अहम् एकं प्रश्नं पृच्छामि । भवतः उत्तरम् 'आम्' इति 'न' इति वा भवेत्, नान्यत् किमपि । अनुमन्यते वा एतत् ?'' इति प्रतिप्रश्नं कृतवान् साक्षी ।

''प्रश्नं पृच्छतु तावत्'' इति गर्वेण उक्तवान् न्यायवादी ।

''मम प्रश्नः अस्ति - भवान् इदानीम् अपि पत्नीं ताडयन् अस्ति वा ?'' इति ।



## परीक्षा कृता, तावदेव

बालकः कश्चन एकं सस्यम् आरोपितवान् । पिता तं बोधितवान् - ''प्रतिदिनं जलसेचनं करोतु । अचिरात् एव तस्य मूलं दृढं भविष्यति । ततः सस्यं वर्धिष्यते'' इति ।

दिनपञ्चके एव सस्यं शुष्कं सत् मृतम् अभवत् । एतेन कुपितः पिता पुत्रम् आहूय पृष्टवान् - ''सस्यं प्रतिदिनम् उन्मूल्य नाशितं भवता इति भवतः मात्रा उक्तम् । किं सत्यम् एतत् ?'' इति ।

''नैव तात ! मूलं दृढं जातं वा न वा इति प्रतिदिनं परीक्षां कृतवान् अहं, तावदेव ।''



## निरपराधिता

न्यायाधीशः - भवतः पक्षस्य समर्थकः कः ?

आरोपी - नान्यः । अहम् एव मम पक्षस्य समर्थकः ।

न्यायधीशः - तर्हि स्वस्य निरपराधित्वं समर्थयतु भवान् ।

आरोपी - अहं वस्तुतः निरपराधी एव । यदि अहम् अपराधी स्यां तर्हि कञ्चित् न्यायवादिनं स्वपक्षस्य समर्थनार्थं नियोजयेयं खलु ?



## मातुः आदेशः कारणम्...

प्राथमिकविद्यालये शिक्षकः पाठयन् आसीत् । पाठानन्तरं सः विद्यार्थिनः पृष्टवान् - ''भवतां मध्ये के के स्वर्गं गन्तुम् इच्छन्ति ?'' इति ।

रमेशं विहाय अन्ये सर्वेऽपि हस्तम् उन्नीतवन्तः ।

शिक्षकः पृष्टवान् - ''रमेश, भवान् स्वर्गं गन्तुं न इच्छति किम् ?''

रमेशः उक्तवान् - ''न । यतः मम माता 'कक्ष्यासमाप्त्यनुक्षणं गृहम् एव आगच्छतु' इति उक्तवती अस्ति ।''



## एकः एव अवशिष्यते...

''भोः सुरेश, भवान् यस्याम् उत्पीठिकायात् अस्ति तत्र दश मशकाः सन्ति इति चिन्तयतु । भवान् तेषु एकं मशकं मारयति चेत्, तदा तत्र कति मशकाः भवन्ति ?'' इति पृष्टवती शिक्षिका ।

बहु चिन्तनं कृत्वा सुरेशः उक्तवान् - ''अहं यं मशकं मारयामि सः मशकः तत्र एव भवति ।''



## यतः श्वः विरामः...

''अद्य पाठः अस्ति इत्यस्य भविष्यत्कालरूपं किम् ?''

''श्वः विरामः भविष्यति इति ।''

''कथम् एतत् ?''

''यतः श्वः भानुवासरः ।''



## करिष्यामि 'दोषान्'...

''पुनः पुनः दोषं करोति खलु भवान् ? भवता एवं करणीयम् ।''

''अस्तु तर्हि । इतः परं न करिष्यामि 'दोषम्', अपि तु करिष्यामि

'दोषान्' ।''



## भग्नानि न भविष्यन्ति...

क्रिकेट् क्रीडतः च्छात्रान् उद्दिश्य गृहस्वामी उक्तवान् - ''भोः, अत्र न क्रीडनीयं भवद्भिः । यतः मम वातायनस्थानि काचकानि भग्नानि भवेयुः इति भीतिः मम ।''

तदा कश्चन च्छात्रः उक्तवान् - ''आर्य ! अलं चिन्तया । वातायनस्थानि काचकानि भग्नानि न भवन्ति । यतः इतःपूर्वं त्रिवारम् अपि भवतः गृहस्य द्वारस्यैव काचकानि भग्नानि, न तु वातायनस्थानि ।''



## आदेशः अस्तीत्यतः...

''किम् एतत् ? पितुः आसने एव शयनं कृतवान् अस्ति भवान् ?''
''मम आसने भवता 'न उपवेष्टव्यम्' इति तर्जनपूर्वकं पिता माम् आदिष्टवान् आसीत् । अतः.....''



## सन्तोषः तदर्थम्

''सन्तोषकरी कापि वार्ता अस्ति वा ?''

''आम् । रमेशस्य विवाहः जातः इति श्रूयते ।''

''अहो, खेदकरी वार्ता एषा ! यतः तस्य स्वातन्त्र्यं नष्टम् अभवत् !''

''अतः एव सन्तोषः । पूर्वं स्वातन्त्र्यसद्भावात् गर्वेण व्यवहरति स्म सः । इदानीं तु अस्मत्समानतां गतः सः ।''



## सदंशमात्रं स्मर्यते...

''गतषण्मासाभ्यन्तरे चतुर्वारं भवान् चौर्यारोपं प्राप्तवान् । पञ्चमवारम् इदानीं तस्यैव आरोपस्य निमित्तं न्यायालयं प्रति आनीतः भवान् । स्मरति वा एतत् सर्वम् ?'' - न्यायाधीशः पृष्टवान् ।

तदा अपराधी शान्तस्वरेण उक्तवान् - ''तादृशान् अंशान् अहं न स्मरामि श्रीमन् ! यतः 'सदंशाः एव स्मरणीयाः, न अन्ये' इति बाल्ये एव अहं मात्रा बोधितः अस्मि ।''



## समस्याः परिहृताः कथम् ?

कश्चन चिन्ताक्रान्तः सन् आसने उपविष्टवान् आसीत् । तदीय-स्नेहितः तस्य पार्श्वम् आगत्य पृष्टवान् - ''चिन्ताक्रान्तः इव लक्ष्यते भवान् ! का चिन्ता भवतः ?'' इति ।



''का चिन्ता इति ? बह्व्यः चिन्ताः मम । पुत्रस्य विद्यालयशुल्कं दातव्यम् । पत्न्यैः सुवर्णहारः कारणीयः । मात्रे शाटिका दापनीया । गृहार्थं दूरदर्शनम् आनेतव्यम् । गृहस्य समीकरणं कारणीयम् । एवं बह्व्यः समस्याः मम ।''

''अतः एव महती चिन्ता भवतः । अहं भवतः समस्याः परिहरिष्यामि । एकैकशः समस्यां वदतु । पुत्रस्य शुल्कं

कियत् ?''

''सहस्त्रं रूप्यकाणि ।''

''पत्न्याः निमित्तं कारणीयस्य सुवर्णहारस्य किं मूल्यम् ?''

''५ सहस्त्रं रूप्यकाणि ।''

''मात्रे दापनीयायाः शाटिकायाः मूल्यम् ?''

''पञ्चशतं रूप्यकाणि ।''

''दूरदर्शनस्य कृते कियत् दातव्यं भवेत् ? गृहस्य समीकरणार्थं च कियान् व्ययः भवेत् ?''

''दूरदर्शनार्थं पञ्चदश सहस्त्रं रूप्यकाणि । गृहसमीकरणार्थं दशसहस्त्रं रूप्यकाणि व्ययीकरणीकानि भवेयुः ।''

''एवं च भवते आहत्य ३१, ५०० रूप्यकाणि अपेक्षितानि खलु?''

''आम् ।''

''इदानीं भवतः बह्व्यः समस्याः परिहृताः ।''

''कथम् एतत् ?''

''पूर्वम् अनेकाः समस्याः आसन् । इदानीं भवान् ३१, ५०० रूप्यकाणि कथं सङ्ग्रहणीयानि इति एकस्याः समस्यायाः परिहारं चिन्तयति चेत् पर्याप्तम् । अन्यासां विषये चिन्तनीयं नास्ति । अतः भवतः बह्व्यः समस्या अपगताः एव खलु ?''



## शब्दमात्रे उपयोगः...

अचिरात् एव राजनीतिक्षेत्रम् आगतवन्तं पुत्रं बोधितवान् राजनीतिनिपुणः पिता - ''भोः, अत्र प्रवेशानन्तरम् अपि भवान् प्रामाणिकता, सत्यं, जनसेवा इत्यादिकं वदन् भवति खलु ! राजनीतिक्षेत्रे एते गुणाः अकिञ्चित्कराः । त्यक्तव्याः एते अंशाः ।''

तदा ज्ञातराजनीतिः पुत्रः उक्तवान् – ''तात ! एतत्सर्वम् अहं न जानामि वा ? अतः एव अहं शब्दमात्रे एतेषाम् उपयोगं करोमि, न तु नित्यजीवने ।''



## मादृशाः आसन् बहवः

''वेदान्तविषयकं भवतः ह्यस्तनं भाषणम् अत्युत्तमम् आसीत् ।''

''भाषणम् उत्तमम् आसीत् इति अन्ये अपि बहवः माम् उक्तवन्तः सन्ति ।''

''एवं तर्हि भाषणस्य अर्थम् अवगन्तुम् असमर्थाः मादृशाः बहवः आसन् ह्यस्तनसभायाम् !!''



## तदर्थं भीतः आसम्...

उपाहारमन्दिरम् आगतः कश्चन ग्राहकः दोसाखाद्यं प्रदर्शयन् वितारकम् उक्तवान् – ''किं भोः एतत् ! दोसाखाद्ये मक्षिकायाः अवयवाः दृश्यन्ते !''

''हुँ, मक्षिकायाः अवयवाः दृष्टाः वा भवता ! अहं तु भीतः आसं यत् भवता तैलपानाम् अवयवाः प्राप्ताः स्युः इति । यतः प्रातः दोसापिष्टतः मया त्रयः तैलपाः निष्कासिताः आसन् ।''



## त्यागकरणम्

''मित्र ! सर्वदा सज्जनानाम् एव सहवासः करणीयः । दुर्जनानां सहवासः परित्यक्तव्यः ।''

''एवं वा ? तर्हि भवतः सहवासं परित्यक्तवान् अस्मि ।''



## कथनस्य हेतुः अन्यः एव

पत्नीपीडितानां सभा सा । अध्यक्षः उक्तवान् - ''एषा पत्नीपीडितानां सभा । अतः अत्र सर्वे पत्न्या पीड्यमानाः एव स्मः ।''

तदा कश्चित् उत्थाय उक्तवान् - ''नैव, अहं पत्नीपीडितः नास्मि ।'' इति ।

''कथम् एतत् ?'' - सर्वे आश्चर्यं प्रकटितवन्तः ।

तदा तस्य प्रतिवेशी उक्तवान् - ''तस्य पत्नी तं सूचितवती अस्ति यत् सभायां 'पत्नीपीडितः नास्मि' इति भवता यदि न उच्यते तर्हि सप्ताहं यावत् आहारः न दीयते इति । अतः सः तथा उक्तवान् ।''



## साहाय्यं करोमि...

कदाचित् रामचन्द्रः कार्यालयतः शीघ्रमेव गृहम् आगतवान् । रामचन्द्रस्य द्वौ पुत्रौ आस्ताम् । गृहे तौ अदृष्ट्वा रामचन्द्रः प्राङ्गणं गत्वा ततः उच्चैः आहूतवान् । पितापुत्रयोः सम्भाषणम् एवं प्रवृत्तम् –



रामचन्द्रः - भोः केशव ! भवान् कुत्र अस्ति ?

केशवः - अहम् उद्याने अस्मि ।

रा - उद्याने भवान् किं करोति ?

के - अहं किमपि न करोमि । आलस्येन उपविष्टवान् अस्मि ।

रा - भोः माधव ! भवान् कुत्र अस्ति ?
माधवः - अहम् अपि उद्याने अस्मि ।
रा - भवान् किं करोति ?
मा - अहं केशवस्य कार्ये साहाय्यं करोमि ।



## शक्यते एव...

"यत् अस्मत्समीपे सर्वदा न भवति तत् अन्यस्मै दातुं न शक्यते खलु ?"

"कुतो न ? शक्यते एव !"

"कथं तत् ? एकम् उदाहरणं वदतु तावत् ।"

" स्वयं गौरवहीनाः अपि वयं क्वचित् अन्यस्मै गौरवं दातुं शक्नुमः एव ।"



## श्वस्तनकार्यम् अद्यैव

शङ्करः कश्चन विद्यार्थी । शनिवासरे सः शय्यायां सुखेन शयानः कथापुस्तकं पठन् आसीत् । पुत्रस्य एतां प्रवृत्तिं दृष्ट्वा पिता पृष्टवान् - "किं भोः, अद्य विद्यालयं न गतवान् भवान् वा ? किम् अद्य विरामः ?" इति ।

तदा पुत्रः उक्तवान् - "विरामः न अद्य, अपि तु श्वः । किन्तु सुभाषिते उक्तम् अस्ति खलु - 'श्वः करणीयानि कुर्यात् अद्यैव बुद्धिमान्' इति ? अतः श्वस्तनं विरामसुखानुभवम् अद्यैव प्राप्नुवन् अस्मि ।"



## उपकृतोऽस्मि

चौर्यं कुर्वन्तं चोरं गृहीत्वा आरक्षकः उक्तवान् - ''किं रे पश्यतोहर ! आगच्छतु आरक्षकालयम् । कारागारे पातयिष्यामि भवन्तम् ।''

''आरक्षकवर्य ! अनेके धन्यवादाः । अद्य भोजनं कथम् इति चिन्तयन् अहं चौर्ये मतिं कृतवान् आसम् । मां गृह्णता भवता मम समस्यायाः परिहारः कृतः ।''



## कारणं तत्...

''किमर्थं सर्वेभ्यः ऋणं स्वीकरोति भवान् ।''

''सर्वेभ्यः ऋणं न स्वीकरणीयम् इति अहम् अपि चिन्तयामि । किन्तु किं करवाणि, कोऽपि एकः एव सर्वदा ऋणं न ददाति खलु मह्यम् !''



## अहो, स्मरणशीलता !

''धिक् भवतः विस्मरणशीलताम् ! अविस्मृत्य शाकाः आनेतव्याः इति सूचितवती आसम् । भवान् तु...''

''अये, मां विस्मरणशीलं मा भावयतु भवती । कार्यालयतः आगमनसमये मया शाकाः अविस्मृत्य क्रीताः एव !''

''तर्हि ते कुत्र ?''

''लोकयाने ते परित्यक्ताः विस्मरणवशात् ।''



## यदि सा न स्यात्...

उद्योगं कञ्चन अपेक्ष्य आगतम् अभ्यर्थिनं मन्त्री पृष्टवान् - ''भवान् दशसहस्रं रूप्यकाणि उत्कोचरूपेण दातुं शक्नोति वा ?''

''न, श्रीमन् । ''

''यदि तथा समर्थः स्यात् तर्हि भवन्तं जनपदाधिकारिणम् अकरिष्यम् । अस्तु , पि. एच्. डि.-पदवी अस्ति वा भवतः ?''

''नैव खलु !''

''यदि तादृशी पदवी स्यात् तर्हि भवन्तं प्राध्यापकम् अकरिष्यम् । भवान् अस्त्रप्रयोग-मल्लयुद्धादिकं किमपि जानाति वा ?''

''तदपि न''

''यदि तत् जानीयात् तर्हि आरक्षकाधिकारिणम् अकरिष्यम् । भवान् नाट्याभिनयादिषु निपुणः वा ?''

''न श्रीमन् !''

''यदि नटनाकौशलं भवतः स्यात् तर्हि भवन्तं नायकनटम् अकरिष्यम् । अस्तु, भवतः बुद्धिमत्ता अस्ति वा ?''

अभ्यर्थी साभिमानम् उक्तवान् - ''आम्'' इति ।

''हा हन्त ! यदि सा न स्यात् तर्हि भवन्तं राजकीयपुरुषं वा अकरिष्यम् ।''



## न करोमि तथा

कार्यालयतः गृहम् आगतः रामरायः पत्नीम् उक्तवान् - ''भोः, शेखरः भवत्याः सखीं रुक्मिणीं परिणेष्यति इति श्रूयते ।''

''शेखरः नाम सः एव खलु, यश्च पूर्वं मम सहाध्यायी आसीत् ?''

''आम् ।''

''तर्हि तं वदतु – रुक्मिणी न परिणेतव्या इति । यतः सा कलहशीला, कोलाहलप्रिया, संशयप्रवृत्तियुक्ता, कठोरचित्ता च अस्ति । यदि तेन सा परिणीयेत तर्हि अग्रे पश्चात्तापः अनुभोक्तव्यः भवेत् । अतः पूर्वम् एव सूचनं वरम् ।''

''अहं तं सर्वथा न सूचयिष्यामि'' – दृढस्वरेण उक्तवान् रामरायः ।

''किमर्थम् ?'' – कुतूहलेन पृष्टवती पत्नी ।

तदा मन्दस्वरेण उक्तवान् रामरायः – ''यतः सः मम विवाहात् पूर्वम् एतादृशं साहाय्यं न कृतवान् आसीत् ।''



## शुल्कं प्रवेशाय...

उद्यानस्य द्वारे फलकम् आसीत् – 'उद्याने विहारः निश्शुल्कः' इति । एतत् पठित्वा सन्तुष्टः कश्चन कृपणः उद्यानम् उपसर्प्य अन्तः गन्तुम् उद्युक्तः ।

तदा उद्यानपालकः तस्य प्रवेशं निवारयन् उक्तवान् – ''एकं रूप्यकं दातव्यं भवता प्रवेशार्थम्'' इति ।

''निश्शुल्कः विहारः इति खलु फलके लिखितम् अस्ति ?'' इति उक्तवान् कृपणः ।

तदा उद्यानपालकः शान्तस्वरेण एव उक्तवान् – ''अन्तः विहारः निश्शुल्कः एव । किन्तु प्रवेशः सशुल्कः'' इति ।



## ते न जानन्ति...

विस्मरणशीलः प्राध्यापकः स्वमित्रं पृष्टवान् – ''अहं किं विस्मरणशीलः ?''

मित्रेण उक्तम् - ''न । सर्वथा न ।''

प्राध्यापकः पुनः पृष्टवान् - ''किन्तु केचन मया पृष्टस्य एतस्य एव प्रश्नस्य उत्तररूपेण 'आम्' इति वदन्ति किल, किमर्थम् ?''

''ते न जानन्ति यत् भवान् सर्वदा एतम् एव प्रश्नं पृच्छति इति ।''



## हानिवृद्धिः एवम्...

'बस्प्रयाणमूल्यं वर्धितम्' इति श्रुत्वा धर्मेशः उक्तवान् - ''एतेन सर्वकारस्य हानिः वर्धिष्यते'' इति ।

''कथम् एतत् ?'' इति आश्चर्येण पृष्टवान् सत्येशः ।

''पश्यतु भोः । मम कार्यालयं प्रति गमनार्थं पूर्वं रूप्यकद्वयं दातव्यम् आसीत् । इदानीं तु सार्धरूप्यकद्वयं दातव्यम् । ततः...''

''ततः हानिवृद्धिः कथम् ?...''

''मादृशाः बहवः चिटिकाम् अस्वीकृत्य एव प्रयाणं कुर्वन्ति । अस्माकं चिटिका-अस्वीकरणात् पूर्वं रूप्यकद्वयमिता हानिः भवति स्म सर्वकारस्य । इदानीं तु अर्धरूप्यकमिता हानिः अधिका जाता ।''



## सर्वप्रथमं तदेव...

सद्यः अधिकारिपदम् अलङ्कृतवान् कश्चन तरुणः अधिकारी कार्यालयीयान् उद्योगिनः मेलयित्वा उक्तवान् - ''वयं जनैः सह प्रीत्या व्यवहरेम । श्रद्धया कार्यं कुर्याम ।''

एतत् श्रुत्वा उद्योगिनः उक्तवन्तः - ''बहु उत्तमं वचनम् एतत् । फलके एतत् लेखयित्वा भित्तौ स्थापयिष्यामः वयम् ।''

''अस्माभिः समये उपस्थातव्यम् । सदा आसने स्थातव्यम् । तत्तद्दिनस्य

कार्यं तत्तद्दिने एव समापनीयम्'' - अधिकारी पुनः उक्तवान् ।

''एतत् वयम् अंशतः अनुसरन्तः स्मः एव । क्वचिदेव विलम्बः भवति अस्माकम् । वयम् आसने तिष्ठामः एव । क्वचित् यदा बहिः गच्छामः तदा अस्मदीयं प्रावारकम् (कोट्) अस्मदुपस्थितिं प्रमाणीकरोति । कानिचन कार्याणि तु तत्तद्दिने समाप्यन्ते एव'' - इति उक्तवन्तः उद्योगिनः ।

''वयं यावत् वेतनं प्राप्नुमः ततोऽपि अधिकवेतनम् अन्यकार्यालयीयाः प्राप्नुवन्ति । अतः वेतनवृद्ध्यर्थम् अस्माकं संस्थायाः प्रमुखाः अनुरोधपूर्वकं प्रार्थनीयाः ।''

अधिकारिणः वचनस्य समाप्तेः अनुक्षणम् एव सर्वे उद्योगिनः उत्थाय एकस्वरेण उक्तवन्तः - ''वेतनदाने पक्षपातः अक्षम्यः अपराधः । एतां प्रवृत्तिं विरुध्य वयम् अद्य एव कर्मविरामान्दोलनं (स्ट्रैक्) करिष्यामः । यावत् वेतनवृद्धिः न भविष्यति तावत् वयं कार्यं न करिष्यामः एव ।''



## तस्मिन् एव समये...

''आर्ये, पार्श्वगृहस्य बालकः रमेशः आ सप्ताहात् उषसि आगत्य भवत्याः गृहस्य पुष्पाणि चोरयति'' इति उक्तवान् दिनेशः ।

''वत्स ! एतत् कथं जानाति भवान् ?'' इति कुतूहलेन पृष्टवती प्रतिवेशिनी ।

''यतः अहं प्रतिदिनं तस्मिन् एव समये भवत्याः गृहस्य पुष्पाणि अवचित्य नयामि ।''



## उत्तराधिकरिता प्राप्तव्या चेत्...

'किं भोः, भवान् सर्वदा असत्यानि एव वदन् भवति इति वदति खलु भवतः माता ? किम् एतत् सत्यम् ?'' - इति पुत्रं पृष्टवान् राजकीयपुरुषः ।

''....'' शिरः अवनमय्य मौनेन स्थितवान् पुत्रः ।

तदा राजकीयपुरुषः पुत्रं बोधितवान् - ''तरुणस्य भवतः एतत् न युज्यते । मम उत्तराधिकारिता प्राप्तव्या चेत् अचिरात् एव अन्यानि अपि कौशलानि सम्पादनीयानि भवता ।''



## सर्वं सर्वकारेण एव

''मम पुत्रस्य अन्नवस्त्रादिव्ययं समग्रं सर्वकारः एव निर्वहति'' इति उक्तवती रुक्मिणीदेवी ।

''कथं सम्भवति तत् ? कीदृशः उद्योगः तस्य ?'' इति पृष्टवती मालादेवी ।

''एकपैसात्मकव्ययः अपि नास्ति तस्य । यतः आजीवनकारागारवासेन दण्डितः अस्ति सः ।''



## तर्कसिद्धा सत्यवादिता

एकदा कस्याञ्चित् सभायां कश्चन राजकीयपुरुषः प्रशासननिर्वाचनम् अधिकृत्य भाषणं कृतवान् । प्रत्यर्थि-राजकीयपुरुषान् मनसि निधाय सः उक्तवान् - ''राजकीयपुरुषाः अनृत-भाषिणः । अतः ते न विश्वसनीयाः'' इति ।

भाषणं श्रोतुम् उभौ तर्क-विद्यार्थिनौ अपि आगतौ आस्ताम् ।



भाषणं समाप्य तौ प्रस्थितौ । गमनसमये एकः अपरम् उक्तवान् - ''राजकीयजनानां सत्यवादिता अद्य सम्यक् निरूपिता भाषणकारेण'' इति ।

तदा अपरः उक्तवान् - '' भोः, किम् एतत् ! राजकीयपुरुषाः असत्यवादिनः इति खलु तेन उक्तम् ? अतः अद्य राजकीयजनानाम् असत्यवादिता प्रतिपादिता तेन'' इति ।

''मया अपि सर्वं श्रुतम् । राजकीयजनाः असत्यवादिनः इति तेन उक्तम् इति तु सत्यम् एव । किन्तु तस्य तात्पर्यं तु 'राजकीयजनाः सत्यवादिनः' इत्येव सिद्धम्'' इति उक्तवान् प्रथमः ।

''कथम् एतत् ?'' इति पृष्टवान् द्वितीयः ।

''तत् तु एवम् - एषः राजकीयनेता उक्तवान् यत् राजकीयपुरुषाः असत्यवादिनः इति । एषः अपि राजकीयपुरुषः अस्ति । अतः एतेन यत् उक्तं तदपि मिथ्या भवति । तन्नाम 'राजकीयपुरुषाः असत्यवादिनः न' इति अर्थः सिद्ध्यति । एतस्यात् सिद्धं यत् राजकीयजनाः सत्यवादिनः इति'' इति विवरणं दत्तवान् प्रथमः ।



## अन्तः एव अस्ति...

''कः समयः इति दृष्ट्वा वदतु '' - कार्यं कुर्वन् पिता उक्तवान् स्वपुत्रम् अल्पवयस्कम् ।

पुत्रः भित्तिघटीं दृष्टवान् । समयः न ज्ञातः ।

सः पितरम् उक्तवान् - ''न ज्ञायते ।''

''अस्तु । घट्याः सूचीद्वयं दृश्यते खलु ? तत् कुत्र कुत्र अस्ति इति वा वदतु ।''

पुत्रः उच्चस्वरेण उक्तवान् - ''सूचीद्वयम् अपि घट्याः अन्तः एव अस्ति तात ।''



## किमर्थं तर्जनं नास्ति भवतः ?

नगरे वर्षं यावत् उद्योगं कृत्वा प्रत्यागतवान् भीमः नगरस्य वैशिष्ट्यं वर्णयन् रामम् उक्तवान् - ''अहं नगरे क्षीरं तैलम् इत्यादिकम् अपि स्यूतेन आनयामि, न तु पात्रेण'' इति ।

''तदा भवतः स्वामी भवन्तं न तर्जयति वा ?'' आश्चर्येण इति पृष्टवान् रामः ।

''न खलु ? किमर्थं तथा पृच्छ्यते भवता ?'' इति कुतूहलेन पृष्टवान् भीमः ।

''यतः अहं कदाचित् यदा तैलं स्यूतेन आनीतवान् आसं तदा मम स्वामी मां सम्यक् ताडितवान् आसीत् ।''



## मन्दगमनस्य कारणम्

मीना कार्यालयं विलम्बेन आगतवती । अधिकारी कोपेन तां पृष्टवान् - ''आगमने एतावान् विलम्बः किमर्थम् ?''

''कश्चित् माम् अनुसृत्य आगच्छन् आसीत् ...''

''किं तेन ? भवत्या वेगेन अग्रे आगन्तव्यम् आसीत् ...''

''अहम् अपि तथैव चिन्तितवती आसम् । किन्तु किं करोमि, सः मन्दम् आगच्छन् आसीत्...''



## तत्र दृश्येत वा ?

''मानचित्रे काश्मीरं कुत्र अस्ति इति वदतु'' इति अध्यापकः गणपतिं सूचितवान् ।

''न जानामि'' इति शान्ततया उक्तवान् गणपतिः ।

''मूर्ख ! एवं तर्हि पीठस्य उपरि तिष्ठतु'' इति कोपेन उक्तवान् अध्यापकः ।

गणपतिः तु शान्ततया पृष्टवान् - ''पीठस्य उपरि स्थितं चेत् काश्मीरं दृश्यते वा ? ''



## अहं चितः अस्मि...

कश्चन सन्दर्शनार्थं गतः । सन्दर्शकः उक्तवान् - ''अहं कानिचन पदानि वदामि । तेषां विरुद्धार्थकपदानि वक्तव्यानि भवता ।''

''अस्तु'' इति अङ्गीकारं सूचितवान् अभ्यर्थी ।

''कोपः'' - सन्दर्शकः उक्तवान् ।

''शान्तता ।''

''धनिकः ।''

''निर्धनः ।''

(प्रशंसाभावेन) ''साधु ।''

''असाधु ।''

(कोपेन) ''रे मूर्ख ।''

(शान्ततया) ''श्रीमन् बुद्धिमन् !''

''अलम् । गच्छतु ।''

''अपर्याप्तम् । उपविशतु ।''

(कोपेन) ''उत्तिष्ठतु रे ।''

''उपविशतु श्रीमन् !''

''निर्गच्छतु इतः ।''

''आगच्छतु ततः ।''

''भवान् उद्योगार्थं तिरस्कृतः अस्ति ।''

''अहम् उद्योगार्थं चितः अस्मि ।''



## अर्धोरुकम् एव सीवयतु...

भीमः सौचिकसमीपं गत्वा पृष्टवान् - ''मम ऊरुकं सीवयितुं धनं कियत् दातव्यम् ?'' इति ।

तदा सौचिकः - ''षष्टिः (६०-००) रूप्यकाणि'' इति उक्तवान् ।

एतत् श्रुत्वा भीमः पृष्टवान् -''अर्धोरुकस्य सीवनमूल्यं कियत् ?'' इति ।

तदा सौचिकः उक्तवान् ''विंशतिः (२०-००) रूप्यकाणि'' इति ।

एतत् श्रुत्वा भीमः - ''तर्हि मम अर्धोरुकम् एव सीवयतु । किन्तु तस्यपादः दीर्घः भवतु'' इति ।



## तत् तु न ज्ञायते, यतः...

दामोदरः भाटकगृहम् इच्छति स्म । अतः सः चामराजनगरप्रदेशं गत्वा कञ्चित् गृहस्थं पृष्टवान् - ''एतस्मिन् प्रदेशे भाटकगृहं लभ्येत वा ?'' इति ।

तदा सः गृहस्थः उक्तवान् - ''पश्यतु, मम गृहे तु भाटकगृहं न लभ्यते । पार्श्वगृहं रिक्तम् अस्ति इति श्रुतवान् अहम् । अतः भवान् तत्र गत्वा विचारयति चेत् वरम्'' इति ।

एतत् श्रुत्वा दामोदरः पार्श्वगृहं गतवान् । तस्मिन् गृहे पतिपत्न्यौ आस्ताम् । दामोदरः तौ भाटकगृहविषये विचारितवान् । तदा तौ उक्तवन्तौ -''आम्, एतत् भाटकार्थम् अस्ति'' इति । तदा दामोदरः अधिकविवरणं ज्ञातुम्

इच्छन् पुनः पृष्टवान् - ''सर्वाः व्यवस्थाः समीचीनाः सन्ति वा अस्मिन् गृहे ? जलसमस्या नास्ति किल ?'' इति ।

तदा पतिः उक्तवान् - ''तद्विषये सम्यक् न जानीमः वयम् । यतः विंशतिवर्षेभ्यः पूर्वम् एव आवां दिवङ्गतौ'' इति ।



## तदपि नष्टं चेत्...

एकः प्रयाणिकः प्रयाणचिटिकाद्वयं क्रीतवान् । तदा निर्वाहकः आश्चर्येण तं पृष्टवान् - ''एकस्य प्रयाणस्य निमित्तं चिटिकाद्वयं किमर्थम् ?''

''एकं यदि नश्येत् तर्हि अपरं वा भवतु इति उद्देशेन'' - प्रयाणिकः उक्तवान् ।

''तदपि नष्टं यदि भवेत् तर्हि...?''

''तदर्थम् अपि उपायः अस्ति मम, यतः अहं मन्दमतिः न । मम कोषे मासिकप्रयाणानुमतिपत्रं (Pass) अस्ति एव...''



## तदेव न निर्णीतिम्...

कश्चन ग्रामः । तस्मिन् ग्रामे एकस्मिंन् गृहे पतिपत्न्यौ सम्भाषणं कुर्वत्यौ आस्ताम् । बहुकालं यावत् सम्भाषणं प्रवृत्तम् । महती चर्चा तयोर्मध्ये । श्रोतॄणां कलहः इव श्रूयते स्म तयोः चर्चा । एतत् श्रुत्वा प्रतिवेशिनां किञ्चित् भीतिः उत्पन्ना । प्रतिवेशिनः तयोः पतिपत्न्योः कोलाहलं आरक्षकान् सूचितवन्तः । विषयं ज्ञात्वा आरक्षकाः तद्गृहम् आगताः । एकः आरक्षकः गृहस्य अन्तः गत्वा कोपेन पृष्टवान् - ''कः एतस्य गृहस्य स्वामी ?'' इति ।

तदा पतिः उक्तवान् - ''तदेव न निर्णीतं श्रीमन् ! तद्विषये एव चर्चा प्रचलति । कः एतस्य गृहस्य स्वामी इत्येव निर्णयः न भवति आवयोः

मध्ये । प्रायशः श्वः सायङ्कालसमये भवान् अत्र आगमिष्यति चेत् भवतः प्रश्नस्य उत्तरं लभ्येत'' इति ।



## तण्डुले न सन्ति पाषाणखण्डाः

आपणस्य पुरतः फलके लिखितम् आसीत् - ''अत्र तण्डुले पाषाणखण्डाः न भवन्ति'' इति ।



किलोपरिमितं तण्डुलं क्रीत्वा गृहं गतः श्रीरामः अर्धघण्टाभ्यन्तरे प्रत्यागत्य आपणिकं तर्जयन् उक्तवान् - ''पुरतः स्थितस्य फलकस्य, अत्र उपलभ्यमानस्य वस्तुनः च सङ्गतिः एव नास्ति खलु ! पश्यतु तावत् अत्र । तण्डुलः पाषाणमयः ।''

''भवतु, किं तेन ?'' - इति शान्तस्वरेण पृष्टवान् आपणिकः ।

''तण्डुलस्य अर्धाधिकभागः पाषाणखण्डमयः !''

''एवं तर्हि पाषाणखण्डेषु तण्डुलाः सन्ति, न तु तण्डुले पाषाणखण्डाः । अतः 'तण्डुले पाषाणखण्डाः न भवन्ति' इत्यस्य वचनस्य भङ्गः तु न जातः एव ।''



## विलम्बस्य कारणम्...

''आगमने किमर्थं विलम्बः ?'' - अध्यापकः कोपेन रामं पृष्टवान् ।

''श्यामस्य एकं रूप्यकनाणकं मार्गे कुत्रापि पतितम् आसीत् । तस्य अन्वेषणे सः मग्नः आसीत् । अतः विलम्बः जातः ।''

''किम् एतत् ? धनं श्यामस्य खलु नष्टम् आसीत् ? सः तस्य अन्वेषणं कृतवान् स्यात् । भवता किमर्थं विलम्बः करणीयः आसीत् ?''

''यतः...., यतः तत् रूप्यकनाणकं मम पादस्य अधः एव आसीत् ।''



## भवन्तम् उद्दिश्य न...

कश्चित् सायङ्कालसमये शुनकेन सह वायुविहारार्थं गच्छन् आसीत् । तदा अभिमुखं कश्चित् तस्य स्नेहितः आगतवान् । स्नेहितः पृष्टवान् - ''किं भोः, गर्दभं नयन् अस्ति भवान् ?'' इति ।

तदा अपरः उक्तवान् - ''किं, मम शुनकः गर्दभः इव दृश्यते वा भवता ?'' इति ।

स्नेहितः उक्तवान् - ''अहं भवन्तम् उद्दिश्य न उक्तवान्, प्रत्युत शुनकम् उद्दिश्य उक्तवान्'' इति ।



## तर्जनं तु...

कश्चित् कृष्णभवननामकम् उपाहारमन्दिरं गतवान् । वितारकः आगत्य पृष्टवान् - ''भवान् किम् इच्छति ?'' इति ।

तदा - ''इड्ली आवश्यकम्'' इति उक्तवान् सः । इड्ली आगतम् । सः खादितवान् । खादनानन्तरं स्थालिकायाम् एव हस्तं क्षालितवान् सः । एतत् दृष्टवतः वितारकस्य महान् कोपः आगतः । वितारकः तस्य समीपं गत्वा पृष्टवान् - '' भवता इदानीं किं कृतम् ?'' इति ।

''इड्लि खादितम्'' इति उक्तवान् सः ।

''अनन्तरं किं कृतम् ?''

''स्थालिकायां हस्तः क्षालितः ।''

''भवान् यदा कदापि पञ्चतारा-उपाहारगृहं गतवान् वा ?''

''आम् । गतवान् आसम् ।''

''तत्र भवान् किं कृतवान् ?''

''इड्ली खादितवान् ।''

(कापेन) ''अनन्तरं किं कृतवान् भवान् ?''

''स्थालिकायां हस्तं क्षालितवान् अहम् ।''

''तत्रत्यः वितारकः भवन्तं न तर्जितवान् किम् ?''

''तर्जितवान् एव ।''

''किमिति ?''

''एतादृशं कार्यं करणीयं चेत् श्रीकृष्णमन्दिरं गच्छतु इति ।''



## गर्दभः किमर्थम् आनीतः ?...

मन्दमतिः मन्त्रिणः आप्तसहायकः । कदाचित् वायुविहारार्थं गतः सः एकस्याः प्रतिमायाः पार्श्वे धावन् आसीत् । तदा प्रतिमामुखतः ध्वनिः निर्गतः - ''मित्र ! क्षण तिष्ठतु...''

आश्चर्यचकितः मन्दमतिः स्थित्वा प्रतिमामुखं निर्निमेषम् अपश्यत् । तदा प्रतिमा पुनः अवदत् - ''मित्र ! आदिनं स्थितितः मम पादवेदना । शिवाजी, राज्ञी चेन्नम्मा इत्यादयः अश्वस्य उपरि खलु उपविशन्ति ? अतः मम उपवेशनार्थम् एकम् अश्वम् आनयतु ।...''

मन्दमतिः धावन् गृहं गत्वा मन्त्रिमहोदयं प्रवृत्तं सर्वं निवेदितवान् । सर्वं श्रुत्वा आश्चर्येण पृष्टवान् मन्त्री - '' किं प्रतिमा भाषते ? सत्यम् एव वा एतत् ?''

''भवान् एव प्रत्यक्षं पश्यतु'' इति उक्त्वा मन्दमतिः मन्त्रिणं प्रतिमासमीपम् आनीतवान् ।

तयोः आगमनं दृष्ट्वा प्रतिमा मन्दमतिम् अपृच्छत् -''अश्वम् आनयतु इति मया सूचितम् आसीत् । भवता तु गर्दभः आनीतः । किमर्थम् एवम् ?''



## वस्तुतः तु...

विरामापेक्षी कश्चन सैनिकः स्वनायकं दृष्ट्वा - ''श्रीमन् ! मम पत्नी व्याधिग्रस्ता सती शय्याम् आश्रितवती अस्ति । सा त्वरया मां द्रष्टुम् इच्छति इति श्रूयते । अतः मया ग्रामः गन्तव्यः'' इति दुःखमिश्रितेन स्वरेण उक्त्वा विरामं याचितवान् ।

''भवतः पत्न्या लिखितं पत्रम् अद्यैव मया प्राप्तम् अस्ति । गृहं गतः भवान् मद्यं पीत्वा उन्मादं प्राप्य वस्तूनि इतस्ततः क्षिपति इति श्रूयते । अतः भवते विरामः न दातव्यः इति सा सूचितवती अस्ति'' इति उक्तवान् सेनानायकः ।

तदा सैनिकः सैनिकप्रणामं समर्प्य - ''श्रीमन् ! आवयोः समानता अस्तीत्यतः एकं वचनं वक्तुम् इच्छामि'' इति उक्तवान् ।

''वदतु तावत् ।''

''असत्यकथने आवां समानौ, अप्रतिमौ च । वस्तुतः तु अहम् अविवाहितः अस्मि ।''



## प्रतिवेशिन्यै दर्शयतु

''अम्ब ! नूतनं सीवनयन्त्रम् आगतम् अस्ति । उत्कृष्टम् एतत् । भवत्यै दर्शयानि वा ?''

''किं तेन ? मम प्रतिवेशिन्यै तत् दर्शयतु । तस्याः यन्त्रम् अतिप्राचीनम् अस्ति । अहं मम सर्वाणि सीवनकार्याणि प्रतिवेशिनीगृहे एव करोमि

सर्वदा ।''



## गन्तव्यम् आसीत् केन ?

एकस्मिन् विश्वविद्यालये विज्ञानविभागे त्रयः प्राध्यापकाः आसन् । कदाचित् ते त्रयः अपि लोकयानस्थानकं गतवन्तः । तत्समये तत्र एकम् अपि यानं न आसीत् । समययापनार्थम् ते विज्ञानविषये चर्चाम् आरब्धवन्तः । ते चर्चायां तथा निमग्नाः अभवन् यत् यानस्य आगमनम् अपि तेषु केनापि न लक्षितम् ।



दशनिमेषाणाम् अनन्तरं यानं ततः प्रस्थितम् । तदा तैः यानस्य निर्गमनं लक्षितम् । ते वेगेन यानसमीपं धावितवन्तः । तेषु द्वौ गच्छत् यानं कष्टेन आरूढवन्तौ । तृतीयः यानम् आरोढुम् एव न शक्तवान् । यानं वेगेन निर्गतम् । आरोढुम् अशक्तः सः प्राध्यापकः हस्तेन शिरः ताडयन् खेदेन स्थितवान् आसीत् ।

तदा पार्श्वस्थः कश्चन सज्जनः अनुकम्पया उक्तवान् - ''तौ तु कथञ्चित् यानम् आरोढुं शक्तवन्तौ । हन्त ! भवान् यानम् आरोढुं न शक्तवान् एव !'' इति ।

तदा सः प्राध्यापकः खेदेन उक्तवान् - ''वस्तुतः मया एव तेन यानेन गन्तव्यम् आसीत् । तौ तु मां प्रेषयितुम् आगतौ आस्तां, तावदेव'' इति ।



## पक्षिणः न भवेयुः

मृगयार्थम् अरण्यं गतः शम्भुः स्वमित्रम् उक्तवान् – ''भोः, पिञ्जं मा चोदयतु । भुषुण्डिकायां गोलकास्त्रपूरणम् इतोऽपि न समाप्तम् ।''

तदा मित्रम् अवदत् – ''भुषुण्डिका न सिद्धा इति कारणतः यदि अहम् पिञ्जस्य नोदने विलम्बं करोमि तर्हि तावता पक्षिणः उड्डयनं कुर्युः ।''



## भवान् कथं क्रीडति ?

नवोढा पत्नी पतिम् उक्तवती – ''माम् अपि चतुरङ्गक्रीडां बोधयतु आर्य'' इति ।

''चतुरङ्गक्रीडार्थं बुद्धिमत्ता अपेक्षिता भवति । न सुलभा सा'' – पतिः उक्तवान् ।

''भवान् पुनः सदा प्रतिवेशिना सह चतुरङ्गक्रीडां कथं क्रीडन् भवति ?'' साश्चर्यं पृष्टवती पत्नी ।



## तदर्थं तथा...

पतिः पत्न्या सह स्कूटर्यानेन गच्छन् आसीत् । मध्येमार्गं पत्नी यानात् पतितवती । पतिः ताम् उपेक्ष्य गृहं प्रत्यागतवान् एव ।

पत्नी कथञ्चित् गृहम् आगत्य पतिं कोपेन पृष्टवती – ''पतितां मां दृष्ट्वा अपि साहाय्यम् अकृत्वा, माम् अस्वीकृत्य, किमर्थं भवान् आगतवान् ?'' इति ।

तदा पतिः शान्तस्वरेण उक्तवान् – ''परह्यः पयोहिम(ऐस् क्रीम्)खादनसमये भवती उक्तवती आसीत् खलु – 'पतितं न स्वीकरणीयम्' इति ? तदर्थम् अहं तथा कृतवान् ।''



## वस्तुतस्तु मया उच्यते...

न्यायालयम् आगतं साक्षिणम् उद्दिश्य न्यायाधीशः उक्तवान् - ''आदौ शपथग्रहणं किमर्थं क्रियते इति जानाति खलु भवान् ?'' इति ।

''आम्, जानामि । यत् वक्तव्यम् आसीत् तस्य परिवर्तनं शपथग्रहणानन्तरं न करणीयम् । एवं खलु ?'' इति उक्तवान् सक्षी ।

''साधु ! योग्यः अर्थः गृहीतः भवता ।''

''न्यायालये यत् वक्तव्यम् इति मया सङ्कल्पितम् आसीत् तदेव वदामि अद्य । तत्र न भवति परिवर्तनम् । किन्तु वस्तुतः तु मया अद्य यत् उच्यते तत् सर्वथा असत्यम् ।''



## माम् अवलम्बते सर्वकारोऽपि

करसम्बन्धिनि आवेदनपत्रे प्रश्नः आसीत् - 'भवतः आयम् अवलम्ब्य स्थितवन्तः के ?' इति ।

कश्चन एवं लिखितवान् - ''माम् अवलम्ब्य तिष्ठन्ति एकः पुत्रः, एका पत्नी, सर्वकारः च'' इति ।



## न भविष्यति तथा

''महाकलहशीला शान्ताम्बा आसीत् खलु ? तस्याः विवाहः गतसप्ताहे सम्पन्नः'' इति उक्तवती सीतालक्ष्मीः ।

''हा हन्तः ! तस्याः पत्युः जीवनं नितरां कष्टमयं भविष्यति ।''

''कथं तत् ?''

''यतः तस्याः पतिः जन्मना बधिरः अस्ति ।''



## आधारं विना कथम् ?

''एतस्मिन् कण्डोले किम् अस्ति ?'' इति रमेशं पृष्टवान् भीमेशः ।

''न जानामि खलु ?'' इति उक्तवान् रमेशः ।

''यदि एतस्मिन् किम् अस्ति इति भवान् वदेत् तर्हि एतस्य अन्तः विद्यमानानि त्रिंशत् स्वादुफलानि अपि भवते एव दास्यामि'' – भीमेशः उक्तवान् !

''आधारं विना कथम् अहं वक्तुं शक्नोमि ?'' इति वदन् असमर्थतां प्रदर्शितवान् रमेशः ।



## सञ्चिकाणाम् उपयोगः...

''राजारामः कार्यालयीयाः सञ्चिकाः प्रतिदिनं गृहं प्रति आनयति ।''

''कार्यालये बहूनि कार्याणि स्युः तस्य ।''

''न तथा । सञ्चिकाः उपधानीकृत्य शयनं कृतं चेदेव निद्रां प्राप्नोति सः ।''



## कलहपरिहारोपायः

रैल्याने द्वयोः महिलयोः कलहः आरब्धः । एका वदति स्म – ''शैत्यम् अधिकम् । अतः यानस्य द्वाराणि पिधातव्यानि । अन्यथा मम मरणं भविष्यति'' इति ।

अपरा वदति स्म – ''औष्ण्यं सुमहत् । अतः यानस्य द्वाराणि उद्घाटनीयानि एव । अन्यथा अहं मृता भविष्यामि'' इति ।

एका द्वारपिधानं करोति स्म । अपरा तानि उद्घाटयति स्म । एवं द्वित्रवारं प्रवृत्तम् । वाक्कलहः उच्चैः प्रवृत्तः । एतं कोलाहलम् असहमानाः जनाः प्रयाणचिटिकापरीक्षकम् आनीतवन्तः । सर्वं शान्ततया श्रुतवान् सः ।

समस्यापरिहारः कथम् इति तेनापि न ज्ञातम् ।

तदा तत्रैव स्थितः कश्चन ज्येष्ठः उक्तवान् - ''आदौ द्वाराणि पिदधातु । तदा औष्ण्यकारणतः एका मृता भविष्यति । अनन्तरं तानि उद्घाटयतु । तदा शैत्यकारणतः अन्या मृता भविष्यति । ततः सर्वे प्रयाणिकाः निश्चिन्ततया प्रयाणम् अनुवर्तयितुम् अर्हन्ति ।''



## विवाहे हस्तग्रहणस्य कारणम्

''तात ! विवाहसमये पुरोहितः किमर्थं वधूवरयोः हस्तौ ग्राहयति ?'' इति पृष्टवान् बालकः ।

तदा पिता उक्तवान् - ''सः क्रीडासम्प्रदायः पुत्र ! परस्परयुद्धारम्भतः पूर्वम् उभयपक्षीयौ अपि परस्परहस्तं गृह्णन्ति इति तु परम्परा'' इति ।



## तत् मया न याचितम्

''श्रीमन् ! महती बुभुक्षा । कृपया किञ्चित् अन्नं ददातु'' इति प्रार्थितवान् भिक्षुकः ।

''गृहस्वामिनी गृहे नास्ति । अग्रे गच्छतु रे'' इति उक्तवान् गृहस्वामी ।

''मया गृहस्वामिन्याः दानं न याचितम्, अपि तु अन्नं याचितम् । तत् ददातु कृपया'' इति उक्तवान् भिक्षुकः ।



## तया सह निद्रा कुत्र ?

''पूर्वम् अहं मीनाक्ष्या सह निद्रां करोमि स्म'' इति गर्वेण उक्तवान् परमेशः ।

''एवम् ! कदा तथा कृतम् ?'' इति कुतूहलेन पृष्टवान् जगदीशः ।

''यदा अहं महाविद्यालये पठामि स्म तदा तथा करोमि स्म - गणितकक्ष्यायां

पाठसमये'' इति हसन् उक्तवान् परमेशः ।



## हाराः अल्पाः एव प्राप्ताः...

हरीशः निर्वाचने जयं प्राप्य सांसदः जातः । सौभाग्यवशात् मन्त्री अपि अभवत् सः । मन्त्री भूत्वा ऐदम्प्राथम्येन यदा सः स्वनगरम् आगतवान् तदा महती स्वागतसभा प्रवृत्ता । विंशत्यधिकाः जनाः प्रशंसापूर्वकं तस्मै हारान् समर्पितवन्तः। तथापि मन्त्रिणः मुखं म्लानम् एव आसीत् ।

एतत् लक्षितवान् कश्चित् हरीशं पृष्टवान् - ''मुखे इतोऽपि म्लानता किमर्थम् ?''

तदा मन्त्री उक्तवान् - ''कार्यक्रमे विंशत्यधिकाः एव हाराः प्राप्ताः । मया तु पञ्चाशतः हाराणां कृते धनं दत्तम् आसीत् ।''



## तत्र लिखितम् आसीत् यत्...

रेल्वेस्थानके कश्चन बालः रोदनं कुर्वन् आसीत् । कश्चन प्रयाणिकः तं रोदनकारणं पृष्टवान् । तदा बालकः उक्तवान् - ''अमूल्यं दृढपत्रद्वयं मम नष्टम् ।''

''तयोः कः विषयः आसीत् ?''

''तयोः आधारेण अहम् अद्यावधि प्रभूतं धनं सम्पादितवान् आसम्...'' इति उक्त्वा पुनः रुदितवान् बालः ।

''तत्र किं वा आसीत् ?'' इति, पुनः पृष्टवान् प्रयाणिकः ।

''एकस्मिन् 'अन्धः' इति अन्यस्मिन् 'बधिरः' इति च लिखितम् आसीत्'' इति रुदन् एव उत्तरं दत्तवान् सः बालकः ।



## एष उपदेशः...

कश्चन आपणिकः स्वपुत्रेण सह मार्गे गच्छन् आसीत् । किञ्चिद्दूरं गमनानन्तरं तत्रैव विद्यमानम् एकम् उपाहारगृहं दर्शयन् पिता पुत्रम् अवदत् - ''वत्स ! एतस्मिन् उपाहारगृहे भवता कदापि न खादनीयम्'' इति ।

पुत्रः पृष्टवान् - ''किमर्थं न खादनीयं तात ?''

तदा पिता उक्तवान् - ''एतस्य स्वामी अस्माकम् आपणतः एव वस्तूनि नयति, अतः....।''



## दग्धस्य चिकित्सा...

कश्चन नवोढः सायङ्काले कार्यालयतः प्रत्यागमनसमये 'पत्न्यै दातुं किमपि स्वीकरणीयम्' इति चिन्तयन् आपणं प्रविष्टवान् ।

परन्तु सः तत्र विद्यमानानि वस्तूनि दृष्ट्वा 'किं स्वीकरणीयम्' इति न ज्ञातवान् । अन्ते सः तत्र स्थापितां 'बर्नाल्'विज्ञापिकां दृष्टवान् । तत्र 'दहनेन जातानां व्रणानां कृते लेपनार्थं' 'बर्नाल्' स्वीकुर्वन्तु' इति लिखितम् आसीत् । 'मम पत्नी प्रतिदिनं पाकं करोति । पाककरणसमये हस्तस्य, अङ्गुलेः वा दहनं भवति चेत् लेपयितुं शक्यते' इति विचिन्त्य सः 'बर्नाल्' स्वीकृतवान् ।

गृहम् आगत्य पत्न्यै तत् यच्छन् सः उक्तवान् - ''किमपि दग्धं भवति चेत् लेपयितुं शक्यते । स्वीकरोतु एतत्'' इति ।

रात्रौ भोजनार्थं पत्नी तम् आहूतवती । भोजने खादितुं सा रोटिकाः कृतवती आसीत् । सः आगत्य भोजनं कर्तुम् उपविष्टवान् । सा रोटिकां परिविष्टवती । परन्तु ताः रोटिकाः दुर्गन्धायन्ते स्म । काश्चन रोटिकाः दग्धाः अपि आसन् । तदा सः पत्नीं पृष्टवान् - ''किं भोः ! कः दुर्गन्धः एषः ?'' इति ।

तदा पत्नी उक्तवती - ''दग्धं भवति चेत् लेपयितुं शक्यते इति वदन् भवान् 'बर्नाल्' दत्तवान् आसीत् खलु ? रोटिकाः दग्धाः आसन् । अतः अहं बर्नाल् लेपितवती'' इति ।

❖❖❖❖

## समुचितम् उत्तरम्

एकस्मिन् सन्दर्शने अधिकारी अभ्यर्थिनम् उद्दिश्य कांश्चन प्रश्नान् पृष्टवान् । तयोः प्रश्नोत्तरम् एवं प्रवृत्तम् -

अधिकारी - 'वेडताङ्गल्' पक्षिधाम्नि दृश्यमानाः पक्षिणः कुतः आगताः ?

अभ्यर्थी - अण्डात् एव ।

अधिकारी - अतिक्रूरान् पञ्चवन्यमृगान् वदतु ।

अभ्यर्थी - त्रयः सिंहाः, द्वौ व्याघ्रौ च ।

अधिकारी - अहं भवते पञ्च फलानि ददामि । भवदीयः पिता भवते त्रीणि फलानि ददाति । तदा आहत्य भवत्सकाशे कति फलानि भवन्ति ?

अभ्यर्थी - दश फलानि ।

अधिकारी - ५+३=८ खलु ? कथं भवान् उक्तवान् - 'दश फलानि' इति ?

अभ्यर्थी - यतः ततः पूर्वम् एव मम सकाशे फलद्वयम् आसीत् ।

❖❖❖❖

## भारस्य न्यूनता अश्वे...

''मम पत्नी स्वस्य स्थौल्यस्य न्यूनीकरणार्थं प्रतिदिनम् अश्वम् अरुह्य सञ्चारं कुर्वती अस्ति'' इति उक्तवान् वेङ्कटेशः ।

''ततः कोऽपि परिणामः लक्षितः वा ? '' इति पृष्टवान् अभिरामः । तदा वेङ्कटेशः उक्तवान् - ''परिणामः महान् एव लक्षितः । सप्ताहाभ्यन्तरे अश्वस्य भारे दशपौण्ड्मिता न्यूनता दृष्टा'' इति ।



## शुल्काधिक्यस्य कारणम्...

भूषणः दन्तस्य निष्कासनार्थं दन्तवैद्यसमीपं गतवान् । किन्तु दन्तनिष्कासनविषये महती भीतिः आसीत् तस्य । तथापि धैर्येण वैद्यसमीपं गतवान् सः । दन्तनिष्कासनसमये महान्तं कोलाहलं कृतवान् सः ।

दन्तनिष्कासनानन्तरं वैद्यः देयकं (Bill) दत्तवान् । रू. ३०० -०० दातव्यानि अभवन् भूषणेन । एतत् दृष्ट्वा आश्चर्येण पृष्टवान् भूषणः - ''एकस्य दन्तस्य निष्कासनार्थं किं त्रिशतं रूप्यकाणि ?'' इति ।

तदा वैद्यः उक्तवान् - ''भवतः कोलाहलं श्रुत्वा बहिः उपविष्टाः चत्वारः धावितवन्तः भीत्या । अतः तावत् शुल्कं दातव्यं भवता'' इति ।



## साधुवादः किमर्थम् ?

गणिताध्यापकस्य कक्ष्यां प्रति कदाचित् निरीक्षकः आगत्य छात्रान् उद्दिश्य पृष्टवान् - ''चतुर्णां चत्वारि कति ?'' इति ।

एकः छात्रः उक्तवान् - ''विंशतिः'' इति ।

अध्यापकः प्रशंसामिश्रितेन स्वरेण उक्तवान् – ''साधु ! साधु !'' इति ।

तदा निरीक्षकः आश्चर्येण पृष्टवान् – ''दोषयुक्तम् उत्तरं श्रुत्वा अपि भवान् साधुवादं वदति खलु !'' इति ।

''इतः पूर्वं सः 'चत्वारिंशत्', 'पञ्चाशत्' इत्येवमादिकं वदति स्म । अद्य तु ततोऽपि 'न्यूनतमसङ्ख्यां' वदन् अस्ति । अतः सन्तोषः मम'' इति उक्तवान् अध्यापकः ।



## अपरम् अपि उत्पाट्य आगच्छतु....

एकः काणः चलनचित्रमन्दिरम् गत्वा चिटिकादातारम् उक्तवान् – ''द्वे नेत्रे येषां भवतः तेषां कृते दशरूप्यकाणां शुल्कं खलु ? मम तु एकम् एव नेत्रम् । अतः अहम् अर्धमूल्यम् एव ददामि'' इति ।

तदा चिटिकादाता उक्तवान् – ''भवतः युक्तिः युक्ता एव अस्ति । भवते निश्शुल्कं दर्शनार्थम् एव अवकाशं कल्पयिष्यामि । किन्तु तदर्थं भवता अपरम् अपि नेत्रम् उत्पाट्य आगन्तव्यम् ।''



## पुरुषः न, पतिः...

''अद्य प्रातः भवत्या सह कोऽपि पुरुषः वार्तालापं कुर्वन् दृष्टः मया'' इति उक्तवती मीनाक्षी ।

तदा वनजाक्षी उक्तवती – ''सः न पुरुषः, अपि तु मम पतिः ।''



## तदर्थं तथा...

परमेशः क्षीरविक्रयिकः । गिरीशः तस्य गृहं प्रति उद्योगित्वेन आगतवान् । प्रतिदिनं परमेशः वदति स्म – ''जलपात्रे क्षीरं योजयतु'' इति ।

एकदा गिरीशः परमेशं पृष्टवान् – ''कुतः जलपात्रे एव क्षीरं योजनीयम् ? क्षीरपात्रे जलं किमर्थं न योजनीयम् ?'' इति ।

तदा परमेशः बोधितवान् – ''पुत्र ! अस्माभिः क्षीरे जलं न योज्यते इति आत्मसाक्षितया वक्तुं शक्यते खलु ? तदर्थं तथा'' इति ।



## किं यन्त्रेण ?

''असत्यकथनं सुलभतया ज्ञातुं किञ्चन यन्त्रम् अन्विष्टम् अस्ति इति श्रूयते । तत् यन्त्रं दृष्टं वा भवता ?'' – इति पृष्टवान् शङ्करः ।

तदा शुभङ्करः उक्तवान् – ''किं दर्शनेन ? तादृशी कचित् परिणीता एव अस्ति मया ।''



## सः तु...

''यदा मम पुत्रः भाषमाणः भवति तदा तस्य वचनं समग्रः देशः एव शृणोति ।''

''प्रायः सः नेहरूसदृशः, गान्धिसदृशः, वाजपेयिसदृशः वा राजकीयनायकः स्यात् ।''

''न । सः कश्चन आकाशवाण्याः उद्घोषकः ।''



## पुत्रेण ज्ञातुं तु...

सत्यस्य माहात्म्यं ज्ञापयतुं पिता पुत्रं 'सत्यहरिश्चन्द्र'नाटकं दर्शयितुं नीतवान् । नाटकं दृष्ट्वा प्रत्यागमनसमये पिता पृष्टवान् – ''नाटकं कथम् आसीत् ?''

''उत्तमम् आसीत्'' - पुत्रः उक्तवान् ।

''नाटकदर्शनतः भवता का नीतिः अवगता ?''

''सत्यं न वक्तव्यम् । सत्यवक्तुः श्मशानम् एव गतिः भविष्यति इति मया ज्ञातम् ।''



## पठितुं न जानाति शुनकः

''मम शुनकः कुत्रापि अदृश्यतां गतः ।''

''एवम् ! तर्हि पत्रिकायां विज्ञापिकां प्रकाशयतु एतद्विषये ।''

''किं तेन ? मम शुनकः पठितुं न जानाति ।''



## उपवेशनस्य कारणम्

भीमाचार्यस्य गानकार्यक्रमः कश्चन प्रवर्तमानः आसीत् । सः नेत्रे निमील्य तन्मयः सन् गायति स्म । तस्य गानं तावत् श्रवणकठोरम् आसीत् यत् तत् श्रोतुम् अशक्ताः श्रोतारः एकैकशः उत्थाय गतवन्तः ।

गानं समाप्य नेत्रे उद्घाटितवान् भीमाचार्यः । सभायाम् श्रोतृस्थाने एकः एव उपविष्टः आसीत् । तस्य गानप्रियतां प्रशंसन् उक्तवान् भीमाचार्यः - ''भवान् एकः वा अस्ति किल मम गानं श्रोतुम्'' इति ।

''अलं गानश्रवणाप्रस्तावेन । भवतः कार्यक्रमस्य अनन्तरं मम गानकार्यक्रमः निश्चितः अस्ति । अतः उपविष्टः अस्मि'' इति उक्तवान् सः ।



## किम् अन्यत् करवाणि ?

''पाकार्थं पनसफलम् आवश्यकम् इति अहं पतिम् उक्तवती आसम् । पनसफलम् अवचेतुं वृक्षम् आरूढवान् सः अजागरूकता- वशात् ततः पतितः । तस्य पादभङ्गः जातः'' इति प्रवृत्तं विवृतवती विमला ।

कमला पृष्टवती - ''ततः भवती किं कृतवती ?'' इति ।

''किं करवाणि ? पनसस्य अभावकारणतः आलुकेन पाकं कृतवती'' इति उत्तरं दत्तवती विमला ।



## चिकित्सा...

''भवान् पशुवैद्यः वा ?'' - कश्चन आगत्य पृष्टवान् ।

तदा पशुवैद्यः उक्तवान् - ''आम् । भवतः कः रोगः ? वदतु । औषधं दास्यामि ।''



## वीजनस्य कारणम् अन्यत्...

पाश्चात्यदेशे प्रवृत्ता घटना एषा ।

काचित् तरुणी आसीत् । तस्याः पतिः अकस्मात् दिवङ्गतः । सा पत्युः शवं पेटिकायां स्थापयित्वा श्मशाने निखननं कृत्वा स्मारकं कारितवती । स्मारकस्य पार्श्वे उपविश्य व्यजनेन वीजनम् आरब्धवती सा ।

तदा जनाः ताम् उक्तवन्तः - ''भवत्याः पतिभक्तिः निश्चयेन श्लाघ्या एव । मृतस्य अपि पत्युः सेवां करोति भवती'' इति ।

एतत् श्रुत्वा सा तरुणी उक्तवती - ''किं सेवाप्रस्तावेन ? मम पतिः उक्तवान् आसीत् यत् स्मारकस्य शुष्कता यावत् न भवति तावत् अन्यः न परिणेतव्यः इति । अतः शीघ्रं शुष्कता भवतु इति उद्देशेन वीजयन्ती अस्मि ।''



## किं गणनया ?

उभौ चोरौ वित्तकोषं लुण्ठितवन्तौ, लक्षाधिकरूप्यकाणि प्राप्तवन्तौ च । निवासप्राप्त्यनन्तरम् एकः अपरं पृष्टवान् - ''कियत् प्राप्तम् इति ज्ञातुं

धनं गणयाम वा ?'' इति ।

''किं व्यर्थश्रमेण ? श्वः पत्रिकायां चौर्यवार्ता प्रकाश्यते एव । ततः गणना ज्ञातुं शक्या'' इति उक्तवान् अपरः ।



## एकेनैव कृताः न...

शिष्येण गृहपाठे कृतान् दोषान् दृष्ट्वा अध्यापकः उक्तवान् - ''एतावन्तः दोषाः ! ते अपि एकेनैव कृताः !!'' इति ।

तदा शिष्यः उक्तवान् - ''एते सर्वे दोषाः एकेनैव कृताः न श्रीमन् ! गृहपाठलेखने मम पिता अपि साहाय्यं कृतवान् आसीत्'' इति ।



## दयार्हतायाः कारणम् ...

पुत्रस्य पत्युः च हननं कृतवती काचित् न्यायालयम् आनीता आसीत् । तस्याः पक्षस्य न्यायावादी न्यायधीशम् उक्तवन् - ''एषा दोषं कृतवती इति तु सत्यम् एव । तथापि मानवतायाः आधारेण एतस्याः विमोचनं करणीयम्, दण्डे वा न्यूनता करणीया'' इति ।

''मानवतायाः प्रस्तावः अत्र कथम् ?'' इति पृष्टवान् न्यायाधीशः ।

तदा न्यायवादी उक्तवान् - ''पतिविरहिता, पुत्रविरहिता च एषा विधवा अपुत्रा च अस्ति । अतः दयार्हा एषा'' इति ।



## अनन्तरखादनस्य कारणम्...

''अहं मम पत्नी च प्रतिदिनं रात्रौ रोटिकां खादावः । मम खादनस्य अनन्तरम् एव सा रोटिकां खादति प्रतिदिनम्'' इति उक्तवान् वृद्धः शम्भुनाथः ।

''भवतः पत्नी निश्चयेन श्रेष्ठा पतिव्रता एव'' इति उक्तवान् मल्लिनाथः ।

''तथा किमपि नास्ति । मम खादनस्य अनन्तरम् एव सा रोटिकां खादति यत् तस्य कारणं तु आवयोः एका एव कृत्रिमदन्तावली अस्ति'' इति उक्तवान् शम्भुनाथः ।



## का सा ?

''ह्यः रात्रौ अहं पठन् आसम् । यस्याः उपस्थितितः मम सन्तोषः भवति स्म सा अकस्मात् गता । मम पठनोत्साहः एव नष्टः अभवत् ।''

''ततस्ततः ?''

''अल्पकालानन्तरं सा प्रत्यागता । अहं नवोत्साहं प्राप्य पठनम् अनुवर्तितवान् ।...''

''का सा ?''

''सा अस्ति विद्युत् ।''



## कः रोगः एषः ?

देहपरीक्षानिमित्तं कश्चित् वैद्यसमीपं गतवान् । वैद्यः पृष्टवान् - ''नेत्रयोः पुरतः तिस्रः तारकाः सदा दृश्यन्ते वा ?''

''आं, वैद्यमहोदय !''

''तदा तदा शिरोवेदना बाधते वा ?''

''सत्यं वैद्यवर्य !''

''पृष्ठवेदना ?''

''साऽपि पौनःपुन्येन बाधते श्रीमन् ?''

''उदरे तापः अपि भवति खलु ?''

''आम् ।''

''शिरोभ्रमणं कदाचित् भवति ?''

''भवति कदाचित् ।''

''ममापि एवम् एव भवति । न जाने, कः रोगः एषः इति'' इति आश्चर्येण उक्तवान् वैद्यः ।



## वार्ता बान्धवाय आदौ

पुरोहितस्य कस्यचित् गृहस्य पुरतः कश्चन गर्दभः कदाचित् मृतः अभवत् । तदा पुरोहितः एतां वार्तां दूरवाणीद्वारा नगरसभाकार्यालयस्य अधिकारिणं निवेदितवान् ।

तत्रत्यः अधिकारी विनोदशीलः आसीत् । अतः सः हसन् पुरोहितम् उक्तवान् - ''पुरोहितवर्य, मरणानन्तरसंस्काराः के इति भवान् एव जानाति । अतः तस्य उत्तरक्रियाम् अपि भवान् एव निर्वर्तयतु'' इति ।

पुरोहितः अपि वस्तुतः विनोदशीलः एव । अतः सः अधिकारिणम् उक्तवान् - ''भवता उक्तं युक्तमेव । किन्तु आदौ मृतस्य बान्धवाः निवेदनीयाः किल । अतः अहं भवते दूरवाणीं कृतवान्'' इति ।

